**मन्यामहे मलयमेव यदाश्रयेण**
**कङ्कोलनिम्बकुटजा अपि चन्दनाः स्युः ॥ ८० ॥**

किं तेनेति ॥ यत्राश्रितास्तरवो वृक्षास्ते तरव एव भवन्ति । तेन हेमगिरिणा सुवर्णाचलेन वा अथवा रजताद्रिणा किं, न किमपीत्यर्थः । वयं तु मलयमेव मलयाचलमेव महान्तं मन्यामहे । कुतः । यस्याश्रयेण कङ्कोलाश्च निम्बाश्च कुटजाश्च तेऽपि चन्दनाश्चन्दनवृक्षाः स्युर्भवन्तीति । चन्दनवृक्षवद्वासन्त इत्यर्थः । वसन्ततिलका वृत्तम् ॥

धीराः पुरुषा अवश्यसंपाद्यत्वेन निश्चितमर्थं संपादयितुं यत्नं कुर्वन्तो मध्ये विघ्नैरभिभूता अपि निश्चितार्थप्राप्तिं विना न विरमन्तीत्यमुमर्थं समुद्रमथनप्रवृत्तदेवदृष्टान्तेनाह—

**रत्नैर्महार्हैस्तुतुषुर्न देवा न भेजिरे भीमविषेण भीतिम् ।**
**सुधां विना न प्रययुर्विरामं न निश्चितार्थाद्विरमन्ति धीराः ॥८१॥**

रत्नैरिति ॥ धीरा गम्भीराः पुरुषा निश्चितार्थान्निश्चितमर्थमप्राप्य न विरमन्ति न विश्राम्यन्ति । आरब्धं यत्नं न त्यजन्तीत्यर्थः । तत्र दृष्टान्तमाह— रत्नैरिति । देवा महार्हैर्महामूल्यै रत्नैर्न तुतुषुः संतोषं न प्रापुः । अमृतमथनार्थं प्रवृत्ता देवा मध्ये उत्पन्नैरपि रत्नैर्न तुतुषुरित्यर्थः । तथा भीमं घोरं विषं तेन भीतिं भयं न भेजिरे न सिषिवुः । महाभयजनकेनोत्पन्नेन विषेणाऽपि भयं न प्रापुरित्यर्थः । किं तु सुधाममृतं विना विरामं विश्रान्तिं न प्रययुर्न प्रापुः । प्राप्तव्यत्वेन निश्चितार्थरूपसुधाप्राप्तिं विना यत्नं न त्यजन्तीत्यर्थः । उपेन्द्रवज्रा वृत्तम् ॥

स्वकार्ये दत्तदृष्टिर्विवेकी पुरुषो मध्ये प्राप्तं सुखदुःखादिकं न गणयेदिति बोधयन्नाह—

**क्वचिद्भूमौ शय्या क्वचिदपि च पर्यङ्कशयनं**
**क्वचिच्छाकाहारी क्वचिदपि च शाल्योदनरुचिः ।**
**क्वचित्कन्थाधारी क्वचिदपि च दिव्याम्बरधरो**
**मनस्वी कार्यार्थी न गणयति दुःखं न च सुखम् ॥ ८२ ॥**

क्वचिदिति ॥ क्वचित्कदाचिद्भूमौ पृथिव्यां शय्या शयनम् । करोतीति शेषः। एवमुत्तरत्रापि बोध्यम् । क्वचिदपि च पर्यङ्कशयनम्, क्वचिच्छाकाहारी शाकभोजी, क्वचिदपि च शाल्योदने रुचिर्यस्य सः । शाल्योदनभोजीत्यर्थः । क्वचित्कन्थां प्रावरणविशेषं धारयतीति धारी तथाविधः, क्वचिदपि च दिव्यं

च तदम्बरं वस्त्रं तस्य धरो धारकः, कार्यार्थी कार्येच्छुः, प्रशस्तं मनोऽन्तः-करणं यस्य सः । विवेकीति यावत् । एवंविधः पुरुषः दुःखं न गणयति सुखं च न गणयतीति । शिखरिणी वृत्तम् ॥

सुजनतादिसर्वभूषणापेक्षया शीलमेवोत्तमं भूषणमित्याह—

**ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमो**
**ज्ञानस्योपशमः श्रुतस्य विनयो वित्तस्य पात्रे व्ययः ।**
**अक्रोधस्तपसः क्षमा प्रभवितुर्धर्मस्य निर्व्याजता**
**सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम् ॥ ८३ ॥**

ऐश्वर्यस्येति ॥ सुजनता सौजन्यमैश्वर्यस्य भूषणमलंकरणम् । भवतीति शेषः । एवमुत्तरत्रापि बोध्यम् । सत्यैश्वर्ये सौजन्यं संपादनीयमित्यर्थः । शौर्यस्य वीर्यस्य वाक्संयमो वाङ्नियमः । शौर्ये सति वाचा तदुद्घाटनं न कार्यमित्यर्थः । ज्ञानस्य तत्त्वज्ञानस्योपशमः शान्तिः । तत्त्वज्ञाने सति शान्तिरवश्यं संपादनीयेत्यर्थः । श्रुतस्यानेकशास्त्रश्रवणस्य विनयो नम्रता । शास्त्रश्रवणेन विनयोऽवश्यं संपादनीय इत्यर्थः । वित्तस्य द्रव्यस्य पात्रे सत्पात्रे व्ययो दानम् । सति वित्ते सत्पात्रे दानमवश्यं कर्तव्यमित्यर्थः । तपसोऽक्रोधः क्रोधराहित्यम् । तपः कुर्वता क्रोधो न कार्य इत्यर्थः । प्रभवितुर्निग्रहानुग्रहसमर्थस्य क्षमा, निग्रहानुग्रहसमर्थेन क्षमाऽवश्यं संपादनीया, धर्मस्य स्वधर्माचरणस्य निर्व्याजता निष्कपटता । दम्भेन स्वधर्माचरणं न कार्यमित्यर्थः । सर्वेषामपि जनानां सर्वेषां गुणानां कारणमिदं शीलं स्वभावः परं श्रेष्ठं भूषणमस्ति । सर्वे एते गुणाः स्वभावानुरोधेन भवन्ति न तु बलात्कारेणेति भावः । शार्दूलविक्रीडितं वृत्तम् ॥

धीरपुरुषा निन्दादिभिर्न्यायमार्गान्न प्रच्यवन्तीत्याह—

***निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु***
***लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् ।***
***अद्यैव वा मरणमस्तु युगान्तरे वा***
***न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ॥ ८४ ॥***

निन्दन्त्विति ॥ नीत्यां नये निपुणाः कुशलाः पुरुषा निन्दन्तु निन्दां कुर्वन्तु यदिवा अथवा स्तुवन्तु, लक्ष्मीः संपत् यथेष्टं यथेच्छं समाविशत्वागच्छतु वा गच्छतु, अद्यैव मरणं मृत्युरस्तु युगान्तरेऽन्ययुगे वाऽस्तु, तथाऽपि धीरा गम्भीराः पुरुषा न्यायादनपेतोऽरहितस्तस्मात्पथो मार्गात् न्यायमार्गं विहायाऽन्यत्रैकमपि पदं चरणं न प्रविचलन्ति न गच्छन्ति । अनेन सत्स्वपि निन्दादिषु न्यायमार्गो न हातव्य इति सूचितम् । वसन्ततिलका वृत्तम् ॥

प्रारब्धमेव जनस्य वृद्धिक्षययोः कारणमस्तीति सर्पदृष्टान्तेनाह—

**भग्नाशस्य करण्डपीडिततनोर्म्लानेन्द्रियस्य क्षुधा**
**कृत्वाऽऽखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः ।**
**तृप्तस्तत्पिशितेन सत्वरमसौ तेनैव यातः पथा**
**लोकाः पश्यत दैवमेव हि नृणां वृद्धौ क्षये कारणम् ॥ ८५ ॥**

भग्नाशस्येति ॥ हे लोकाः यूयं नृणां मनुष्याणां वृद्धावैश्वर्ये क्षये च दैवमेव कारणं हि निश्चितं पश्यत । एतदेव दृष्टान्तेनोपपादयति । केनचिन्मन्त्रिणा सर्पं धृत्वा करण्डे निक्षिप्तस्तस्य स्थितिमाह—करण्डे पीडिता तनुर्देहो यस्यात एव भग्ना नष्टा आशा बहिर्निष्क्रमणाशा यस्य तस्य, क्षुधा क्षुधया कृत्वा म्लानानि क्षीणानीन्द्रियाणि यस्यैवंविधस्य भोगिनः सर्पस्य मुखे आखुर्मूषको विवरं करण्डस्य छिद्रं कृत्वा स्वयं निपतितो न केनाऽपि पातितः । असौ सर्पस्तु तस्य मूषकस्य पिशितेन मांसेन तृप्तः सन् तेनैव मूषकविहितेन पथा मार्गेण सत्वरं बहिर्यातो निर्गतः । यथा करण्डस्थितं सर्पमजानन्मूषकः करण्डस्य बिलं कृत्वाऽन्तः प्रविष्टः स्वादृष्टवशादेव तन्मुखे पतित्वा मृतः । सर्पस्तु स्वादृष्टवशादेव तन्मांसेन तृप्तः सन् तत्कृतेन बिलद्वारेण बहिर्निर्गत्य सुखितोऽभूत्तथा सर्वोऽपि जनः स्वादृष्टवशादेव सुखदुःखादिकं भुङ्क्ते इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥

आलस्यं विहायोद्यमकर्ता लोके सुखं प्राप्नोतीत्याह—

**आलस्यं हि मनुष्याणां शरीरस्थो महान्रिपुः ।**
**नास्त्युद्यमसमो बन्धुः कुर्वाणो नावसीदति ॥ ८६ ॥**

आलस्यमिति ॥ अलसस्य भाव आलस्यं व्यापाराराहित्यं, मनुष्याणां शरीरे तिष्ठतीति शरीरस्थो महान् रिपुः शत्रुर्हि निश्चितमस्ति । उद्यमेनोद्योगेन समः सदृशो बन्धुर्नास्ति । तमुद्यमं कुर्वाणः पुरुषो नावसीदति । दारिद्र्यादि दुःखं न प्राप्नोतीत्यर्थः । अनुष्टुब् वृत्तम् ॥

वृक्षादिवदापद आगमापायित्वात्तया सन्तो न सन्तप्यन्त इत्याह—

**छिन्नोऽपि रोहति तरुः क्षीणोऽप्युपचीयते पुनश्चन्द्रः ।**
**इति विमृशन्तः सन्तः सन्तप्यन्ते न ते विपदा ॥ ८७ ॥**

छिन्नोऽपीति ॥ तरुर्वृक्षश्छिन्नोऽपि पुना रोहति प्रादुर्भूतो भवति, तथा क्षीणोऽपि क्षीणकलोऽपि चन्द्रः पुनरुपचीयते वृद्धिं प्राप्नोति, इत्यनेन प्रकारेणापद आगमापायित्वं विमृशन्तो विचारयन्तस्ते प्रसिद्धाः सन्तः साधवो विपदा आपदा न संतप्यन्ते दुःखं न प्राप्नुवन्तीति । आर्या वृत्तम् ॥

दैवे प्रतिकूले सति पौरुषं निरर्थकं भवतीतीन्द्रदृष्टान्तपूर्वकं दैवस्य श्रैष्ठ्यमाह—

> **नेता यस्य बृहस्पतिः प्रहरणं वज्रं सुराः सैनिकाः**
> **स्वर्गो दुर्गमनुग्रहः किल हरेरैरावतो वारणः ।**
> **इत्यैश्वर्यबलान्वितोऽपि बलभिद्भग्नः परैः संगरे**
> **तद्युक्तं ननु दैवमेव शरणं धिग्धिग्वृथा पौरुषम् ॥ ८८ ॥**

नेतेति ॥ बृहस्पतिर्गुरुर्यस्येन्द्रस्य नेता । नायकोऽस्तीति शेषः । एवमुत्तरत्रापि बोध्यम् । प्रहरणमायुधं वज्रं कुलिशम्, सुरा देवाः सेनायां समवेताः सैनिकाः, दुर्गं स्वर्गः, हरेर्विष्णोरनुग्रहः कृपा, किलेति प्रसिद्धम् । वारणो हस्ती ऐरावतः, इति पूर्वोक्तप्रकारेण ऐश्वर्यं च बलं च ताभ्यामन्वितोऽपि बलभिदिन्द्रः । "मघवा" इत्यपि पाठः । संगरे सङ्ग्रामे परैः शत्रुभिः भग्नः, तत्तस्मात् ननु निश्चितं दैवमेव शरणं रक्षितृ इति युक्तम् । "व्यक्तम्" इति पाठे स्पष्टमित्यर्थः । तस्माद्वृथा दैवहीनं पौरुषं पुरुषप्रयत्नं धिग्धिगिति । दैवहीनः पुरुषप्रयत्नो निष्फल इत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥

सर्वस्यस्य कर्माधीनत्वेऽपि सुधीभिर्यत्कर्तव्यं तद्विचारपूर्वकमेव कर्तव्यमिति बोधयन्नाह—

> **कर्मायत्तं फलं पुंसां बुद्धिः कर्मानुसारिणी ।**
> **तथाऽपि सुधिया भाव्यं सुविचार्यैव कुर्वता ॥ ८९ ॥**

कर्मायत्तमिति ॥ यद्यपि पुंसां फलं सुखदुःखादिकं कर्मायत्तं कर्माधीनमस्ति । यादृशं कर्म तादृशं सुखदुःखादिकं भवतीति भावः । सती असती वा बुद्धिः कर्मानुसरत्यनुगच्छतीति कर्मानुसारिण्यस्ति, तथाऽपि सुधिया सुष्ठु विचार्यैव कर्म कुर्वता भाव्यम् । बुद्धिमता पुरुषेण यत्कर्म कर्तव्यं तत्तद्विचारपूर्वकमेव कर्तव्यमित्यर्थः । अनुष्टुब् वृत्तम् ॥

भाग्यहीनः पुरुषो यत्रकुत्राऽपि गतो दुःखमेव लभत इति खल्वाटदृष्टान्तेनाह—

> **खल्वाटो दिवसेश्वरस्य किरणैः सन्तापितो मस्तके**
> **वाञ्छन्देशमनातपं विधिवशात्तालस्य मूलं गतः ।**
> **तत्राप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः**
> **प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापदः ॥ ९० ॥**

खल्वाट इति ॥ प्रायो बाहुल्येन यत्र प्रदेशे भाग्यरहितो भाग्यहीनः पु-

रुपो गच्छति तत्र तं प्रत्यापदो विपत्तयो यान्ति आगच्छन्ति । "तत्रापदां भाजनम्" इति पाठे आपदां विपत्तीनां भाजनं पात्रं भवतीत्यर्थः । तदेव दृष्टान्तेनोपपादयति । खल्वाटो निष्केशशिराः पुरुषो बहिरटन् दिवसेश्वरस्य सूर्यस्य किरणैर्मस्तके शिरसि सन्तापितः सन् अनातपमुष्णरहितं देशं वाञ्छन्निच्छन्विधिवशाद्दैववशात्तालस्य तालवृक्षस्य मूलं गतः । तत्राऽपि तस्मिन्स्थलेऽपि प्रारब्धवशादकस्मात्पतता महाफलेनास्य खल्वाटस्य शिरः सशब्दं यथा स्यात्तथा भग्नमभूदिति शेषः । "तत्राप्याशु" इति पाठे शीघ्रमित्यर्थः । यथा सूर्यकिरणसंतप्तः खल्वाटः छायाप्रदेशे गतोऽपि तालफलेन भग्नशिरा अभवत्तथा भाग्यहीनः पुरुषः यत्रकुत्रापि गतो दुःखमेव लभत इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥

सर्वत्र दैवमेव बलीय इति सदृष्टान्तमाह—

**गजभुजङ्गमयोरपि बन्धनं शशिदिवाकरयोर्ग्रहपीडनम् ।**
**मतिमतां च विलोक्य दरिद्रतां विधिरहो बलवानिति मे मतिः ९१**

गजभुङ्गमेति ॥ गजो हस्ती, भुजङ्गमः सर्पः, तयोरपि बन्धनं भवति । शशी चन्द्रः, दिवाकरः सूर्यस्तयोर्ग्रहेण राहुणा पीडनम् । मतिमतां बुद्धिमतां दरिद्रतां दारिद्र्यं विलोक्य दृष्ट्वा विधिर्दैवं बलवान्बलिष्ठोऽस्तीति मे मतिर्निश्चयोऽस्ति । अहो इति वितर्के । द्रुतविलम्बितं वृत्तम् । "द्रुतविलम्बितमाह नभौ भरौ" इति तल्लक्षणात् ॥

उत्तमपुरुषाणामपि लोकेऽल्पायुष्ट्वं दृष्ट्वा तान्सृजतो ब्रह्मणोऽपि विचारशून्यत्वं दर्शयन्नाह—

**सृजति तावदशेषगुणाकरं पुरुषरत्नमलङ्करणं भुवः ।**
**तदपि तत्क्षणभङ्गि करोति चेदहह कष्टमपण्डितता विधेः ॥ ९२ ॥**

सृजतीति ॥ तावदादौ ब्रह्मा अशेषा ये गुणास्तेषामाकरं खनिः । अशेषगुणपरिपूर्णमित्यर्थः । भुवोऽलङ्करणं शोभाकरं पुरुषरत्नं सृजति सृष्ट्वा च तदपि पुरुषरत्नमपि तत्क्षणभङ्गि तत्क्षणनाशशीलं अल्पायुः करोति चेत् । अहह इति खेदे । कष्टं यथा स्यात्तथा इयं विधेर्ब्रह्मणोऽपण्डितस्य भावोऽपण्डितताऽज्ञानिताऽस्ति । पूर्वोक्तमेव वृत्तम् ॥

जन्मकाले विधिना ललाटलिखितस्यान्यथा करणे कोऽपि न समर्थ इति करीरादिदृष्टान्तेनाह—

**पत्रं नैव यदा करीरविटपे दोषो वसन्तस्य किं**
**नोलूकोऽप्यवलोकते यदि दिवा सूर्यस्य किं दूषणम् ।**

**धारा नैव पतन्ति चातकमुखे मेघस्य किं दूषणं**
**यत्पूर्वं विधिना ललाटलिखितं तन्मार्जितुं कः क्षमः ॥ ९३ ॥**

पत्रमिति ॥ करीरसंज्ञको भाषायां ( नेवती ) इति प्रसिद्धो यो विटपो वृक्षस्तस्मिन् यदा यदि पत्रं पर्णं नैव भवति तर्ह्ययं वसन्तस्याखिलवृक्षपत्रकुसुमादिप्रदस्य वसन्तर्तोर्दोषोऽपराधः किम् । नास्तीत्यर्थः । यदि उलूको (घुघट) इति प्रसिद्धः पक्षिविशेषो दिवाऽपि दिवसेऽपि नावलोकते इदं सूर्यस्य दूषणं किम् । तथा धारा जलधाराश्चातकस्य पक्षिविशेषस्य मुखे नैव पतन्ति तर्हि मेघस्य सर्वतो वृष्टिकरस्य जलदस्य दूषणं किम् । किं तु पूर्वं यद्विधिना ब्रह्मणा जन्मकाले ललाटे लिखितं तन्मार्जितुं दूरीकर्तुं कः क्षमः समर्थः । न कोऽपीत्यर्थः । वसन्तादीनां पत्रसमृद्ध्यादिसाधकत्वेऽपि करीरादिषु पत्राद्यभावे दैवातिरिक्तं कारणं नास्ति । तस्माद्दैवमेव सर्वत्र प्रबलमिति भावः । शार्दूलविक्रीडितं वृत्तम् ॥

प्राचीनं कर्म प्रशंसति द्वाभ्याम्—

**नमस्यामो देवान्ननु हतविधेस्तेऽपि वशगा**
**विधिर्वन्द्यः सोऽपि प्रतिनियतकर्मैकफलदः ।**
**फलं कर्मायत्तं किममरगणैः किंच विधिना**
**नमस्तत्कर्मभ्यो विधिरपि न येभ्यः प्रभवति ॥ ९४ ॥**

नमस्याम इति ॥ वयं देवान्नमस्यामः । उपपदविभक्तेः कारकविभक्तिर्बलीयस्त्वाद्द्वितीया । ननु निश्चितं तेऽपि देवा अपि हतो नष्टो यो विधिर्ब्रह्मा तस्य वशगा अधीनाः सन्ति । विधिर्ब्रह्मा वन्द्योऽस्ति सोऽपि प्रतिनियतं शास्त्रनियमितं यत्कर्म तस्यैकं मुख्यं फलं ददातीति । तथाविधकर्मानुरोधि फलदातेत्यर्थः । फलमपि कर्मण आयत्तमाधीनमस्ति तर्हि अमरगणैर्देवैः किं, विधिना च किम् । न किमपीत्यर्थः । विधिरपि येभ्यः कर्मभ्यो न प्रभवति न पर्याप्तो भवति । कर्माणि परावर्तयितुं विधिरपि समर्थो न भवतीत्यर्थः । "नमः स्वस्ति—" इत्यत्रालमिति पर्यायग्रहणाच्चतुर्थी । तस्मात्सर्वापेक्षया कर्मैव प्रबलमिति तात्पर्यम् । शिखरिणी वृत्तम् ॥

किंच—

**ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे**
**विष्णुर्येन दशावतारगहने क्षिप्तो महासंकटे ।**
**रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः**
**सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ॥ ९५ ॥**

ब्रह्मेति ॥ येन कर्मणा ब्रह्माण्डमेव भाण्डं भाजनं तस्योदरे मध्ये ब्रह्मा कुलालवत्कुम्भकारवन्नियमितो नियन्त्रितः। जगन्निर्माणकार्यनिर्णय इत्यर्थः। यथा कुम्भकारो नानाविधघटरचनां करोति तथा ब्रह्मापि नानाविधसृष्टिरचनां करोतीत्यर्थः। एवमुत्तरत्राऽपि बोध्यम्। येन विष्णुर्दशदशावतारा मत्स्यादिजन्मानि तद्रूपं गहनं दुःखं यस्मिंस्तथाविधे महासंकटे क्षिप्तः पातितः। प्रेरित इति यावत्। "गहनं कलिले त्रिपु। नपुंसकं गह्वरे स्याद्दुःखकाननयोरपि" इति मेदिनी। तथा येन कर्मणा रुद्रः शिवः कपालं नरकपालं तेन युक्तो यः पाणिपुटको हस्तसंपुटकस्तस्मिन्या भिक्षा तदर्थं भ्रमणं कारितः। भिक्षाया आधारस्यावश्यकत्वात्तत्सापेक्षितत्वेन देवदत्तस्य गुरुकुलमित्यादिवत्समासः। तथा सूर्यो नित्यमेव गगन आकाशे भ्राम्यति भ्रमणं करोति तस्मै कर्मणे नमोऽस्तु। शार्दूलविक्रीडितं वृत्तम् ॥

भाग्यमेव सर्वत्र समये समये फलति नाकृत्यादय इति वृक्षदृष्टान्तपूर्वकमाह—

**नैवाकृतिः फलति नैव कुलं न शीलं**
**विद्यापि नैव न च यत्नकृतापि सेवा।**
**भाग्यानि पूर्वतपसा खलु संचितानि**
**काले फलन्ति पुरुषस्य यथैव वृक्षाः ॥ ९६ ॥**

नैवेति ॥ आकृतिः स्वरूपं नैव फलति। उत्तमाप्याकृतिरिष्टफलं न जनयतीत्यर्थः। एवमेव सर्वत्रोहनीयम्। कुलं सत्कुलं नैव, शीलं सद्वृत्तं नैव, विद्यापि शास्त्राभ्यासोऽपि नैव, यत्नेन प्रयत्नेन कृतापि सेवा शुश्रूषा न, किंतु पूर्वमाचरितं यत्तपस्तेन संचितानि पुरुषस्य भाग्यानि काले समये फलन्ति। खलु निश्चयेन। अत्र दृष्टान्तः। यथा वृक्षाः काले समय एव फलन्ति नान्यत्र तद्वत्। तस्माद्भाग्यमेव सर्वत्र फलदायकं नान्यदिति भावः। वसन्ततिलका वृत्तम् ॥

पूर्वसंचितपुण्यानि सर्वत्र पुरुषं रक्षन्तीत्याह—

***वने रणे शत्रुजलाग्निमध्ये महार्णवे पर्वतमस्तके वा।***
**सुप्तं प्रमत्तं विषमस्थितं वा रक्षन्ति पुण्यानि पुरा कृतानि ॥ ९७॥**

वन इति ॥ पुरा पूर्वं कृतानि पुण्यानि सुकृतानि वनेऽरण्ये, रणे संग्रामे, शत्रवश्च जलं चाग्निश्च तेषां मध्ये, महार्णवे महासमुद्रे, पर्वतस्य मस्तके शिखरे वा, "पर्वतसंकटे" इति पाठे पर्वते संकटे चेत्यर्थः। सुप्तं निद्रितं,

प्रमत्तं मद्यादिना, विषमे निम्नोन्नतभूमौ स्थितं पुरुषं रक्षन्ति । तस्मात्पुण्यमेव सदा नरैः कार्यमिति भावः । उपेन्द्रवज्रा वृत्तम् ॥

सत्क्रियैव पुरुषेण कर्तव्येति तत्फलप्रदर्शनपूर्वकमाह—

**या साधूंश्च खलान्करोति विदुषो मूर्खान्हितान्द्वेषिणः**
**प्रत्यक्षं कुरुते परोक्षममृतं हालाहलं तत्क्षणात् ।**
**तामाराधय सत्क्रियां भगवतीं भोक्तुं फलं वाञ्छितं**
**हे साधो व्यसनैर्गुणेषु विपुलेष्वास्थां वृथा मा कृथाः ॥ ९८ ॥**

या साधूंश्चेति ॥ या सत्क्रिया खलान् दुर्जनान् साधून्सज्जनान्करोति, मूर्खान्विदुषः पण्डितान्करोति, द्वेषिणः शत्रून् हितान् हितकरान् करोति, परोक्षं प्रत्यक्षं कुरुते, हालाहलं विषविशेषं अमृतं तत्क्षणात्क्षणमात्रेण करोति, तस्माद्धे साधो वाञ्छितमिच्छितं फलं भोक्तुं भगवतीमैश्वर्यवतीं तां सत्क्रियामाराधय, विपुलेषु गुणेषु व्यसनैरासक्तिभिरास्थां यत्नं मा कृथा मा कुरु । "आस्थानीयत्नयोरास्था" इत्यमरः । एतादृशीं सत्क्रियां विहाय गुणास्थया तद्विरुद्धो यत्नः पुरुषेण न कार्य इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥

धीमता पुरुषेण यद्यत्कार्यं कर्तव्यं तस्य परिणामपर्यन्तं विचारं कृत्वा तत्कर्तव्यमित्याह—

**गुणवदगुणवद्वा कुर्वता कार्यमादौ**
**परिणतिरवधार्या यत्नतः पण्डितेन ।**
**अतिरभसकृतानां कर्मणामाविपत्ते-**
**र्भवति हृदयदाही शल्यतुल्यो विपाकः ॥ ९९ ॥**

गुणवदिति ॥ आदौ प्रथमं गुणा विद्यन्ते यस्मिंस्तद्गुणवत् वा अथवा अगुणवत्तद्रहितं कार्यं कुर्वता पण्डितेन यत्नतः परिणतिः परिणामोऽवधार्या निश्चेया । प्रथममेवारभ्यमाणस्य कर्मणः परिणामे सुखदत्वं दुःखदत्वं वेति विचारणीयमित्यर्थः । विपक्षे बाधकमाह—अतिरभसेनातित्वरया कृतानां कर्मणां विपाकः परिणाम आविपत्तेर्मरणपर्यन्तं हृदयं दहतीति हृदयदाही शल्येन नाराचेन तुल्यः । "वा पुंसि शल्यं शङ्कुर्ना" इत्यमरः । बाणाग्रसन्दहनतुल्यदुःखदायीति यावत् । भरणीति । मालिनी वृत्तम् । लक्षणं पूर्वमुक्तमेव ॥

लब्ध्वा कर्मभूमौ जन्म प्राप्य पुरुषेण तप एव कर्तव्यं नान्यदित्यभिप्रा-

**कृत्वा कर्पूरखण्डान्वृतिमिह कुरुते कोद्रवाणां समन्ता-**
**त्प्राप्येमां कर्मभूमिं न चरति मनुजो यस्तपो मन्दभाग्यः ॥ १००॥**

स्थाल्यामिति ॥ यो मनुजो मनुष्य इमां कर्मभूमिं सदाचरणं कर्तुं योग्यां भूमिं प्राप्य तपः कृच्छ्रचान्द्रायणादि न चरति न करोति स मन्दभाग्यो भाग्यहीनः पुरुषो वैदूर्यप्रचुरा वैदूर्यमयी तस्यां स्थाल्यां पाकभाजने इन्धनेष्वाद्यानि मुख्यानि तैश्चन्दनैस्तिलकणान्पचति विक्लेदयति, तिलकणपाचनार्थं स्थालीचन्दनादिसंपादनं यथा व्यर्थं तद्वदन्यत्कर्म करोतीत्यर्थः । तथार्कमूलस्यार्कवृक्षमूलस्य हेतोः सुवर्णस्येमानि सौवर्णानि तैर्लाङ्गलाग्रैर्हलाग्रैर्वसुधां पृथ्वीं विलिखति कर्षति । अर्कमूलसंपादनार्थं स्वर्णलाङ्गलेन भूमिखननं यथा व्यर्थं तद्वदित्यर्थः । तथा कर्पूरखण्डान्कर्पूरवृक्षशकलानि कृत्वा कोद्रवाणां कोरदूषकाणां (हरीक) इति ख्यातानां आसमन्तात् वृतिमावरणमिह कुरुते। कोद्रवरक्षणार्थं कर्पूरवृक्षच्छेदनं यथा व्यर्थं तद्वदित्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥

सर्वस्य कर्माधीनत्वात्कृतेऽपि महति यत्ने यदवश्यं भावि तद्भवत्येवेत्याह—

**मज्जत्वम्भसि यातु मेरुशिखरं शत्रुञ्जयत्वाहवे**
**वाणिज्यं कृषिसेवनादि सकला विद्याः कलाः शिक्षताम्।**
**आकाशं विपुलं प्रयातु खगवत्कृत्वा प्रयत्नं महा-**
**न्नाभाव्यं भवतीह कर्मवशतो भाव्यस्य नाशः कुतः ॥ १०१ ॥**

मज्जत्विति ॥ महान्पुरुषोऽम्भसि जले मज्जतु, मेरोः शृङ्गं यातु, आहवे सङ्ग्रामे शत्रून् जयतु, वणिजः कर्म वाणिज्यम्, कृषिसेवनमादिर्यासां ताश्च सकला विद्याः कलाश्च शिक्षताम्, प्रयत्नं कृत्वा खगवत्पक्षिवद्विपुलं विस्तीर्णमाकाशं प्रयातु, तथापि भवितुं योग्यं भाव्यं न भाव्यमभाव्यं भवनानर्हं इह लोके कर्मवशतः कर्माधीनत्वात् न भवति । भाव्यस्य भवितुं योग्यस्य नाशः कुतः स्यात्। न कुतश्चिदित्यर्थः। तदुक्तम्। "यदभावि न तद्भावि भावि चेन्न तदन्यथा" इति । शार्दूलविक्रीडितं वृत्तम् ॥

प्राचीनकर्मवशात्सर्वमघटमानमपि सिद्ध्यतीत्याह—

**भीमं वनं भवति तस्य पुरं प्रधानं**
**सर्वो जनाः सुजनतामुपयान्ति तस्य ।**
**कृत्स्ना च भूर्भवति सन्निधिरत्नपूर्णा**
**यस्यास्ति पूर्वसुकृतं विपुलं नरस्य ॥ १०२ ॥**

भीममिति ॥ यस्य नरस्य पुरुषस्य विपुलं बहु पूर्वसुकृतं पूर्वपुण्यमस्ति तस्य भीमं भयंकरमपि वनमरण्यं प्रधानं श्रेष्ठं पुरं नगरं भवति । तथा सर्वे जना लोकास्तस्य सुजनस्य भावः सुजनता तां सौजन्यमुपयान्ति प्राप्नुवन्ति । तद्विषये सौजन्यवन्तो भवन्तीत्यर्थः । तथा कृत्स्ना संपूर्णा भूः पृथ्वी सन्त उत्तमा निधयः रत्नानि च तैः पूर्णा परिपूर्णा भवति । पूर्वकर्मानुकूल्ये वसुधान्यथा सती यत्रकुत्रापि निध्यादिकं ददातीत्यर्थः । तस्मात्पुरुषेण पुण्यकर्मैव कर्तव्यमिति तात्पर्यम् । वसन्ततिलका वृत्तम् ॥

पुरुषस्य कर्तव्याकर्तव्ये प्रश्नोत्तराभ्यामाह—

**को लाभो गुणिसंगमः किमसुखं प्राज्ञेतरैः संगतिः**
**का हानिः समयच्युतिर्निपुणता का धर्मतत्त्वे रतिः।**
**कः शूरो विजितेन्द्रियः प्रियतमा कानुव्रता किं धनं**
**विद्या किं सुखमप्रवासगमनं राज्यं किमाज्ञाफलम् ॥ १०३ ॥**

को लाभ इति ॥ लाभोऽभीष्टप्राप्तिः कः ? गुणिनां गुणिपुरुषाणां संगमः संगतिः । पुरुषेण गुणवद्भिरेव संगः कर्तव्य इत्यर्थः । असुखं दुःखं किम् ? प्राज्ञेभ्य इतरैर्मूर्खैः संगतिः । पुरुषेण मूर्खैः सह संगतिः कदापि न कार्येत्यर्थः । हानिः का ? समयस्य यस्मिन्काले यदवश्यं कर्तव्यं तस्य कालस्य च्युतिरतिवाहनम् । पुरुषेण समये समये दत्तावधानेन भाव्यमित्यर्थः । निपुणता का ? धर्मस्य तत्त्वे रहस्ये रतिः प्रीतिः । सर्वदा पुरुषेण धर्माचरणमेव कर्तव्यं नाधर्माचरणमित्यर्थः । शूरः कः ? विजितानीन्द्रियाणि येन स तथाविधः । पुरुषेण जितेन्द्रियेण भाव्यमित्यर्थः । प्रियतमा अतिप्रिया स्त्री का ? अनु पत्यनुरोध एव व्रतं नियमो यस्याः सा । स्वानुकूलायाः स्त्रियः संग्रहः कर्तव्यो नाननुकूलाया इत्यर्थः । धनं किम् ? विद्या शास्त्राद्यभ्यासः । पुरुषेण सदा शास्त्राभ्यास एव कर्तव्य इत्यर्थः । सुखं किम् ? अप्रवासगमनं प्रवासगमनाभावः । प्रवासगमनं यथा न स्यात्तथा पुरुषेण स्थेयमित्यर्थः । राज्यं किम् ? आज्ञैव फलं लाभो यस्य तदेव । येन राज्येनाज्ञा सफला भवेत्तादृशं राज्यं कर्तव्यमित्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥

विवेकिपुरुषस्य द्वे गती भवत इति मालतीकुसुमदृष्टान्तपूर्वकमाह—

**मालतीकुसुमस्येव द्वे गती स्तो मनस्विनः ।**
**मूर्ध्नि सर्वस्य लोकस्य शीर्यते वन एव वा ॥ १०४ ॥**

मालतीति । मालत्या जातिलतायाः कुसुमं पुष्पं तस्येव मनस्विनो विवे-

किन: पुरुषस्य द्वे गती दशे "गतिः स्त्री मार्गदशयोः" इति मेदिनी। भवतः। ह स्फुटम्। कथम्। यथा तेन कुसुमेन सर्वलोकस्य मूर्ध्नि मस्तके स्थीयते, वा अथवा वनेऽरण्य एव शीर्यते शीर्णं भूयते तद्वन्मनस्विनो गृहे लोकमान्या वने अरण्यवासिनो वा भवन्तीत्यर्थः। अनुष्टुब् वृत्तम् ॥

पृथिव्यां सुजनस्थितेर्दौर्लभ्यमाह—

**अप्रियवचनदरिद्रैः प्रियवचनाढ्यैः स्वदारपरितुष्टैः।**
**परपरिवादनिवृत्तैः क्वचित्क्वचिन्मण्डिता वसुधा ॥ १०५ ॥**

अप्रियेति ॥ न प्रियाणि मनःसंतोपकराणि च तानि वचनानि तैर्दरिद्रा हीनास्तैः, प्रियवचनैर्हितकारकवचनैराढ्याः पूर्णास्तैः, स्वदाराभिः स्वकीयस्त्रियैव परितुष्टाः संतुष्टास्तैः, परेषां परिवादो निन्दा तस्याः सकाशान्निवृत्ताः, पराङ्मुखास्तैः, एतादृशैः पुरुषैर्वसुधा पृथ्वी क्वचित्क्वचिन्मण्डितालङ्कृतास्ति। एवंविधाः पुरुषास्त्वतिदुर्लभा इति भावः। आर्या वृत्तम् ॥

धैर्यावलम्बिनः पुरुषस्य धैर्यं नाशयितुं कोऽपि न शक्नोतीत्यग्निदृष्टान्तपूर्वकमाह—

**कदर्थितस्यापि हि धैर्यवृत्तेर्न शक्यते धैर्यगुणः प्रमार्ष्टुम्।**
**अधोमुखस्यापि कृतस्य वह्नेर्नाधः शिखा याति कदाचिदेव॥१०६॥**

कदर्थितस्येति ॥ कदर्थितस्याप्यतिदुःखितस्यापि धैर्येण धीरतया वृत्तिर्वर्तनं यस्य तस्य धैर्यावलम्बिनः पुरुषस्य धैर्यरूपो यो गुणस्तं प्रमार्ष्टुं नाशयितुं कैरपि न शक्यते। तत्र दृष्टान्तमाह—अधोमुखस्येति। अधोमुखं यस्य तस्य कृतस्य। अधोमुखीकृतस्येति यावत्। वह्नेरग्नेः शिखा ज्वाला कदाचिदेव कदाप्यधो न याति किंतूर्ध्वमेव गच्छति। तस्माद्धीरो जनो दुःखितोऽपि धैर्यं न त्यजतीति भावः। उपजातिर्वृत्तम् ॥

धीरः पुरुषः सर्वं जगद्वशीकरोतीत्याह—

**कान्ताकटाक्षविशिखा न लुनन्ति यस्य**
**चित्तं न निर्दहति कोपकृशानुतापः।**
**कर्षन्ति भूरिविषयाश्च न लोभपाशै-**
**र्लोकत्रयं जयति कृत्स्नमिदं स धीरः ॥ १०७ ॥**

कान्ताकटाक्षेति ॥ यस्य पुरुषस्य चित्तमन्तःकरणं कान्तायाः स्त्रियाः कटाक्षा अपाङ्गदर्शनानि तान्येव विशिखा बाणास्ते न लुनन्ति छिन्दन्ति। तथा यस्य चित्तं कोपः क्रोध एव कृशानुरग्निस्तस्य तापः संतापो न निर्-

इति भस्मीकरोति । तथा भूरि बहवो विषया लोभ एव पाशा बन्धनानि धैर्यस्य चित्तं न कर्षन्त्याकर्षन्ति स धीरो जनः कृत्स्नं सर्वमिदं लोकत्रयं जयति वशीकरोति । अनेन कामादयः पुरुषेण त्याज्या इति सूचितम् । वसन्ततिलका वृत्तम् ॥

एक एव शूरः पुरुषः सर्वं जगज्जयतीति सूर्यदृष्टान्तपूर्वकं दर्शयति—

**एकेनापि हि शूरेण पादाक्रान्तं महीतलम् ।**
**क्रियते भास्करेणेव स्फारस्फुरिततेजसा ॥ १०८ ॥**

एकेनेति ॥ स्फारं विस्तीर्णं स्फुरितं देदीप्यमानं तेजो यस्य तेन भास्करेण सूर्येणैवैकेनाद्वितीयेन शूरेण वीरपुरुषेण महीतलं पृथ्वीतलं पादेन चरणेन पक्षे पादैः किरणैश्चाक्रान्तं व्याप्तं क्रियते । यथा सूर्यः स्वपादैः सर्वं जगद्व्याप्तं करोति तथा शूरः पुरुषः स्वपादेनाक्रान्तं करोतीति भावः । अनुष्टुब् वृत्तम् ॥

लोकवल्लभशीलवतः पुरुषस्य सर्वेऽप्यनुकूला भवन्तीत्याह—

**वह्निस्तस्य जलायते जलनिधिः कुल्यायते तत्क्षणा-**
**न्मेरुः स्वल्पशिलायते मृगपतिः सद्यः कुरङ्गायते ।**
**व्यालो माल्यगुणायते विषरसः पीयूषवर्षायते**
**यस्याङ्गेऽखिललोकवल्लभतमं शीलं समुन्मीलति ॥ १०९ ॥**

वह्निरिति ॥ यस्य पुरुषस्याङ्गे शरीरे अखिललोकानां वल्लभतममतिशयेन प्रियं शीलं सद्वर्तनं समुन्मीलत्युज्जृम्भते, तस्य वह्निरग्निरुष्णस्वभावोऽपि जलायते जलमिवाचरति । जलवच्छीतलो भवतीत्यर्थः । "कर्तुः क्यङ् सलोपश्च" इत्याचारार्थे क्यङ् । एवमुत्तरत्रापि बोध्यम् । तथा जलनिधिः समुद्रो दुष्पारोऽपि कुल्यायते कुल्याल्पा सरित्तद्वदाचरति । दुस्तरोऽपि सुतरो भवतीत्यर्थः । तत्क्षणात्क्षणमात्रान्मेरुर्मेरुपर्वतः स्वल्पशिलायते सुष्ठु अल्पा या शिला तद्वदाचरति । महानपि पर्वतः स्वल्पपाषाणतुल्यो भवतीत्यर्थः । मृगपतिः सिंहोऽतिक्रूरोऽपि सद्यः कुरङ्गायते कुरङ्गो हरिणस्तद्वदाचरति । क्रौर्यं त्यजतीत्यर्थः । सर्पोऽतिक्रूरोऽपि माल्यगुणायते माल्यगुण इवाचरति । स्वक्रौर्यं त्यजतीत्यर्थः । विषरसः पीयूषवर्षायते पीयूषरसोऽमृतरसस्तस्य वर्षो वर्षणं तद्वदाचरति । स्वीयं मारकं गुणं त्यजतीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥

तेजस्विनः पुरुषाः स्वीयां प्रतिज्ञां न त्यजन्तीति स्वजननीदृष्टान्तपूर्वकमाह—

**लज्जागुणौघजननीं जननीमिव स्वा-**
**मत्यन्तशुद्धहृदयामनुवर्तमानाम् ।**

तेजस्विनः सुखमसूनपि संत्यजन्ति
सत्यव्रतव्यसनिनो न पुनः प्रतिज्ञाम् ॥ ११० ॥

इति श्रीमद्राजर्षिप्रवरभर्तृहरिकृतं नीतिशतकं संपूर्णम् ॥

लज्जेति ॥ सत्यमेव व्रतं तस्मिन्व्यसनमासक्तिर्येषां ते एवंविधास्तेजस्विनः प्रभाववन्तः पुरुषाः सुखं यथा स्यात्तथा असून् प्राणानपि त्यजन्ति । पुनः स्वां स्वकीयां जननीं मातरमिव प्रतिज्ञां न त्यजन्ति । कीदृशीं प्रतिज्ञां मातरं च । असत्कर्मणि प्रवृत्तिलक्षणलज्जारूपो यो गुणौघो गुणप्रवाहस्तस्य जननीमुत्पादिकाम् । पुनः कीदृशीम् । अत्यन्तं शुद्धं हृदयमन्तःकरणं यस्यां यस्या वा ताम् । पुनः कीदृशीम् । अनुवर्तमानां अनुलक्षेण वर्तमानाम् । अनेन सत्यभाषिणा पुंसा प्राणा अपि त्याज्याः परंतु स्वीयप्रतिज्ञा न त्याज्येति सूचितम् । वसन्ततिलका वृत्तम् ॥

नीत्याख्यशतकव्याख्यामर्थद्योतनिकाभिधाम् ।
कृष्णोऽहं कृतवांस्तेन प्रीयतां विश्वसृड्विभुः ॥ १ ॥

इति कृष्णसूरिविरचितायामर्थद्योतनिकाभिधायां टीकायां नीतिशतकं संपूर्णम् ॥

---

| | कि. | ट. ख. |
|---|---|---|
| सकृत, मल्लिनाथकृत संजीविनी टीकेसहित | -।≤ | ०~ |
| ,, इंग्रजी टीपांसहित ... ... ... | -।।।- | ०~।। |
| यमुनाष्टक-शंकराचार्यकृत ... ... ... | ०। | ०।। |
| रघुवंश काव्य-कालिदासकृत, मल्लिनाथकृत संजीविनी टीकेसहित | १।। | ०≡।। |
| ,, (सूक्ष्माक्षर) ... | -।।।- | ०≈ |
| रत्नसमुच्चय ... ... | ०≈ | ०।। |
| रत्नावली नाटिका-श्रीहर्षदेवकृत... ... ... | -।≈ | ०~ |
| ,, इंग्रजी टीपांसहित ... ... ... | -।।- | ०~ |
| रसिकाष्टक काव्य-नारायणभट्ट पर्वणीकरकृत | ०।। | ०।। |
| रामगीता व रामगीतामाहात्म्य ... ... | ०।।। | ०।। |
| रामचंद्रिका (गुंजीकरकृत संस्कृत शब्दरूपावलि)... ... ... | -।- | ०।। |
| रामरक्षास्तोत्र ... ... | ०।। | ०।। |
| रामस्तवराजस्तोत्र ... | ०~ | ०।। |
| रामायण-वाल्मीकिकृत, रामकृत तिलकटीकेसहित ... ... ... | ८ | -।।।≈ |
| रुद्र... ... ... ... | ०।।। | ०।। |
| लघुकौमुदी-वरदराजकृत ... ... ... | ०≡ | ०~ |
| लघुयोगवासिष्ट, आत्मसुखकृत वासिष्टचंद्रिका टीकेसहित ... | ५ | -।।- |
| लक्ष्मीस्तोत्र-अगस्त्यकृत | ०।। | ०।। |
| वेदांतसार-हें नृसिंहसरस्वति स्वामिकृत सुबोधिनी टीका व रामतीर्थविरचित विद्वन्मनो- | | |

| | कि. | ट. ख. |
|---|---|---|
| रंजनी टीका या दोन टीकांसहित कर्नल जे. ई. जेकब यांनीं पाठांतरें व इंग्लिश नोट्स देऊन तपासलें आहे. | १।। | ०≈।। |
| विक्रमोर्वशी नाटक-कालिदासकृत, रंगनाथकृत प्रकाशिका टीकेसहित... ... ... | -।।।- | ०~ |
| विदुरनीति, सटीक ... | -।≈ | ०।। |
| श्रीविष्णोर्नामसहस्रम् | -।≈ | ०~ |
| विष्णुसहस्रनाम (सा.) | ०~ | ०।। |
| ,, (रेशमी पुट्टा)... | ०≈।। | ०।। |
| ,, मोठ्या अक्षरांचें (सा.) | ०~।। | ०।। |
| विष्णुसहस्रनामावलि ... | ०~। | ०।। |
| ,, (रेशमी पु०) ... | ०≈।। | ०।। |
| वृत्तरत्नाकर-केदारभट्टकृत, नारायणपण्डितकृत टीकेसहित, श्रुतबोध-कालिदासकृत, व छन्दोमञ्जरी-गङ्गादासकृत... ... | -।।।- | ०~ |
| वैदिककोश-भट्टभास्करकृत, निघंटु व चार परिशिष्टें यांसुद्धां ... | -।।- | ०~ |
| वैराग्यशतक-भर्तृहरिकृत, कृष्णशास्त्री महाबलकृत टीकेसहित | -।-।। | ०।। |
| शब्दरूपावलि (गुंजीकरकृत)... ... ... | ०~ | ०।। |
| शिवसहस्रनामावलि (साधी) ... ... | ०~।। | ०।। |
| ,, (रेशमी पुट्टा) | ०≡ | ०।। |
| शिवकवच ... ... | ०।।। | ०।। |
| शुक्लयजुर्वेदीयरुद्राष्टाध्यायी (स्थूलाक्षर) | ०≡ | ०।। |
| शिवगीता (साधी) ... | -।-। | ०~ |
| शिवगीता (रेश० पु०) | -।≈। | ०~ |

| | किं. | ट. ख. |
|---|---|---|
| ,, लक्ष्मीनरहरिसूनुकृत बालानंदिनी टीका व शंकराचार्यकृत कालभैरवाष्टक यांसहित ... ... | १ | ०= |
| शिवतांडवस्तोत्र-दशकंठकृत, माधवानंदकृत टीकेसहित ... ... | ०– | ०॥ |
| शिवमहिम्नस्तोत्र-पुष्पदंतकृत ... ... ... | ०।॥ | ०॥ |
| शिवापराधक्षमापनस्तोत्र-शंकराचार्यकृत | ०॥ | ०॥ |
| शिशुपालवध काव्य-माघकृत, मल्लिनाथकृत सर्वंकषा टीकेसहित | ३ | ।– |
| शितलाष्टक ... ... | ०। | ०॥ |
| शृङ्गारशतक-भर्तृहरिकृत, कृष्णशास्त्री महाबलकृत टीकेसहित | ०≡॥ | ०॥ |
| सत्यनारायण पूजा व कथा ... ... ... | ०– | ०॥ |
| सारस्वतव्याकरणपूर्वार्ध (कापडी बाइंडिंग) | ।– | ०– |
| सप्तशती (चंडीपाठ), देवीसूक्त व तीन रहस्यें यांसहित (स्थूलाक्षर रेशमी पुठ्ठा) | ॥। | ०=॥ |
| सप्तशती (रे. पु. म. अ.) | ।– | ०– |
| ,, (साधी कागदी) | ०≡ | ०– |
| ,, (मध्यमाक्षर सुटी प्रत) | ०= | ०– |
| ,, (सूक्ष्माक्षर रे. पु.) | ।। | ०॥ |
| ,, (स्थूलाक्षर सुटी प्रत) ... ... ... | ॥= | ०= |
| समयोचितपद्यमालिका | ।= | ०– |
| समासचक्र ... ... | ०।॥ | ०॥ |
| सर्वपूजा ... ... ... | ०– | ०॥ |
| सिद्धांतकौमुदी-भट्टोजी दीक्षितकृत, अष्टाध्यायीसूत्रपाठ, गणपाठ, धातुपाठ, लिंगानुशासन व शिक्षा आणि सूत्रानुक्रमणी यांसहित ... ... ... | २ | ।– |
| सुभाषितरत्नभांडागार | ३॥ | ।= |
| सूर्यसहस्रनामावलि ... | ०–॥ | ०॥ |
| ,, (रे. पुठ्ठा) ... | ०≡ | ०॥ |
| सौर ... ... ... | ०॥ | ०॥ |
| स्वानुभवाष्टक-गोपीनाथ दाधीचकृत, स्वकृत सारबोधिनी टीकेसहित ... ... ... | ०– | ०॥ |
| स्वात्मनिरूपण ... ... | ।। | ०॥ |
| हर्षचरित-बाणभट्टकृत, शंकरकृत संकेतटीकेसहित... ... ... | २ | ०= |
| हितोपदेश-नारायणपंडितकृत ... ... | ॥। | ०– |
| (इंग्रजी टीपांसहित) | १ | ०–॥ |
| हिरण्यकेशीय (आपस्तंबीय) नित्यविधि | ०≡ | ०– |

## नामलिंगानुशासन.

### (अमरकोश.)

हें पुस्तक आजपर्यंत बहुतेकांनीं सटीक व सूळ असें छापून प्रसिद्ध केलें व करीतही आहेत, त्यावरून, केवळ याचें नांव ऐकून लोकांस महत्त्व वाटणार नाहीं, परंतु हें तसें नसून केवळ मूळ मात्रच आहे खरें, तथापि याच्या प्रतिश्लोकांत येणारीं ज्या ज्या वस्तूंचीं नांवें असतील तीं दरदृष्टांत त्या त्या ओळीच्या बाजूस मराठींत दिलीं आहेत. व कोणच्या वस्तूचीं किती हें समजण्याकरितां बाजूस अंकही दिला आहे. लवकर ध्यानांत येण्याकरितां विशेषनावें ठेवदीं जाड टैपून बाकी मजकूर बारीक

टैपांत टेविला आहे व टिकटिकाणीं अधिक माहिती देणें ती पृष्ठाच्या शेवटीं दिली आहे. ग्रंथाच्या शेवटीं संस्कृत मूळपदांचा व याहेर दाखविलेल्या मराठी शब्दांचा अकारादिवर्णक्रमकोश जोडला आहे. त्या योगानें हें पुस्तक आबालवृद्धांला व विशेषतः अभ्यासी मुलांला उपयुक्त होईल अशी आशा आहे. हें वे. शा. सं. रा. रा. विनायक नारायण शास्त्री जोशी यांनीं तयार केलें आहे. किं. १ रु. ट. ख. ०३ आणे.

## काव्यमाला.

या नांवाचें संस्कृत मासिक पुस्तक, सन १८८६ चे जान्युआरी महिन्यापासून प्रसिद्ध होत आहे. यांत उत्तम उत्तम प्राचीन संस्कृत काव्यें, नाटकें, चंपू, भाण, प्रहसनें, छंद, अलंकार इत्यादिकांचा यथावकाश संग्रह होत असतो. फार प्राचीन आणि अत्यंत सुरस असेच ग्रंथ निवडून ते या मालेंत गुंफले जातात. महामहोपाध्याय पंडित दुर्गाप्रसाद या नांवाचे विद्वान्, बहुश्रुत आणि शोधक गृहस्थ जयपूरच्या महाराजांचे आश्रयास होते. त्यांनीं काश्मीर, पंजाब, बंगाला, राजपुताना, मध्यदेश, तैलंगण, वगैरे सर्व प्रदेश फिरून नानाप्रकारचे काव्यग्रंथ संपादित केले होते. त्यांतील कित्येक ग्रंथ तर ८०० कियहुना १००० वर्षांच्याही पूर्वींचे होते. ते सर्व ग्रंथ रा० रा० काशिनाथ पांडुरंग परव यांनीं आद्यंत तपासून दिलेले या मालेंत येत जातात; ज्या ग्रंथांच्या टीका उपलब्ध आहेत, ते ग्रंथ सटीक छापले जातात. परंतु टीकारहित ग्रंथांतील दुर्बोध शब्दांवर टिप्पणी देण्यांत येते. शिवाय कवींचें वृत्त, काल व ग्रंथ इत्यादिकांविषयीं माहिती जागोजाग दिली जाते. या मालेचे अंक प्रतिमासास एकदां प्रसिद्ध होतात. प्रत्येक अंकांत डेमी अष्टपत्री सांचाचीं १०० पृष्ठें असतात. याची वर्षाची आगाऊ किंमत ६ रुपये, ट. ख. ।॥। फुटकळ अंकाची किं. ॥ ट. ख. ०८

हें मासिक पुस्तक आज नऊ वर्षे एकसारखें नियत आहे.

हीं पुस्तकें मुंबईंत काळकादेवीच्या रस्त्यावर "निर्णयसागर" छापखान्यांत रोख पैसे पाठविले असतां अथवा व्हाल्युपेएवलद्वारां विकत मिळतील.

# आमच्याकडे विक्रीस असलेलीं संस्कृत पुस्तकें.

| | | किंमत. | टपाल. |
|---|---|---|---|
| | | रु.आ. | आ. |
| १. | आदिकविश्रीवाल्मीकिविरचित रामायण, रामकृत टीकेसहित. | ८—० | १४ |
| २. | सोमदेवभट्टकृत कथासरित्सागर. ... ... ... ... | ६—० | ८ |
| ३. | कालिदासकृत रघुवंश काव्य, मल्लिनाथकृत टीका व पाठान्तरें यासहित. ... ... ... ... ... ... ... | २—० | ३॥ |
| ४. | कालिदासकृत कुमारसंभव काव्य, मल्लिनाथकृत टीका (सर्ग १—८) व सीतारामकृत टीका (सर्ग ८—१७) व पाठान्तरें यासहित. | २—० | ३॥ |
| ५. | कालिदासकृत मेघदूत काव्य, मल्लिनाथकृत टीका, पाठान्तरें व अर्थप्रदर्शक इंग्रजी टिप्पणी यासहित. ... ... ... | ०—१२ | १ |
| ६. | कालिदासकृत ऋतुसंहार काव्य, मणिरामकृत टीका, पाठान्तरें व अर्थप्रदर्शक इंग्रजी टिप्पणी, व शृङ्गारतिलक, यासहित. | ०—६ | १ |
| ७. | कालिदासकृत अभिज्ञानशाकुन्तल नाटक, राघवभट्टकृत टीका, पाठान्तरें व अर्थप्रदर्शक इंग्रजी टिप्पणी यासहित. ... | २—० | २॥ |
| ८. | कालिदासकृत विक्रमोर्वशीय नाटक, रङ्गनाथकृत टीकेसहित. | ०—१२ | २ |
| ९. | कालिदासकृत मालविकाग्निमित्र नाटक, काटयवेमकृत टीका, व अर्थप्रदर्शक इंग्रजी टिप्पणी यासहित. ... ... ... | ०—१२ | २ |
| १०. | श्रीहर्षकृत रत्नावली नाटिका, अर्थप्रदर्शक इंग्रजी टिप्पणीसहित. | ०—८ | १॥ |
| ११. | श्रीहर्षकृत प्रियदर्शिका नाटिका, अर्थप्रदर्शक इंग्रजी टिप्पणीसहित. | ०—८ | १॥ |
| १२. | बाणभट्टकृत कादम्बरी कथा, भानुचन्द्र व सिद्धचन्द्र याच्या टीकांसहित. ... ... ... ... ... ... | ५—० | ८ |
| १३. | दण्डीकृत दशकुमारचरित कथा, पूर्वपीठिका व उत्तरपीठिका, पद्मनाभकृत उत्तरपीठिका, कवीन्द्रसरस्वती व शिवराम याच्या दशकुमारचरितावरील टीका, व पूर्वपीठिकेवरील पददीपिका टीका व पाठान्तरें यासहित. ... ... ... ... | १—८ | ४ |
| १४. | भारविकृत किरातार्जुनीय काव्य, मल्लिनाथकृत टीका व पाठान्तरें यासहित. ... ... ... ... ... ... | २—० | ४ |
| १५ | माघकृत शिशुपालवध काव्य, मल्लिनाथकृत टीका व पाठान्तरें यासहित. .. ... ... ... ... ... ... | ३—० | ६ |
| १६. | भट्टिकविकृत भट्टिकाव्य, जयमङ्गलकृत टीकेसहित ... | ३—० | ४ |
| १७ | नारायणपण्डितकृत हितोपदेश, अर्थप्रदर्शक इंग्रजी टिप्पणीसहित. | १—० | २ |
| १८. | अन्नंभट्टकृत तर्कसंग्रह व दीपिका, इंग्रजी भाषांतरासहित. | ०—६ | १ |
| १९. | लौगाक्षिभास्करकृत तर्ककौमुदी ... ... ... ... | ०—२ | ॥ |
| २०. | सुभाषितरत्नभाण्डागार. ... ... ... ... ... | ३—८ | ५ |